# भारती

## संस्कृतस्य प्रमुखं मासिकपत्रम्





स्वतन्त्रे गणतन्त्रेऽस्मिन् भारते प्रतिभारते ।
भगवान् गणनाथोऽयं गुणिगण्यः प्रसीदतात् ॥




वर्षम् १० | एकादशोङ्कः | वार्षिकमूल्यम् ४) चतस्रो मुद्राः, एकप्रते चत्वारिंशत् नवपणाः (४...

# विषय-सूची

सम्पादकः
कविशिरोमणि
भट्टश्रीमथुरानाथशास्त्री
सहसम्पादक :—
देवर्षिकलानाथशास्त्री
साहित्याचार्यः एम. ए.
जयपुरम्




भानुवद् भारतीयानां भास्वद्भवनभासिनी ।
भागीरथीव भावाढ्या भारते भातु भारती ॥

प्रबन्धसम्पादकः
गिरिराजशर्माशास्त्री
भारती-भवन
गोपालजी का रास्ता,
जयपुर (राज०)

वर्षम् १० | भाद्रपदमासः, सं० २०१७ (सितम्बर मासः सन् १९६०) | अङ्कः ११

# मेघं प्रति

( ले० वै० शङ्करलालशर्मा, फतेहपुरम् )

मेघ ! त्वं यदि नो भवेः भुवि तदा प्राणिस्थितिर्दुर्लभा
दृष्ट्वा त्वां नभसि प्रसन्नहृदया आषाढमासे भृशम् ।
जायन्ते कृषका दिवाकरकरैः सन्तप्तजीवास्तथा
त्वत्तः प्राप्य जलं त्यजन्ति वपुषस्तापं, लभन्ते सुखम् ॥१॥

ग्रीष्मे तिग्मरवेः करैः क्षितिरियं तप्ता विशुष्कद्रुम-
पर्णा म्लानवधूरिवाभ्र ! भवतः सम्प्राप्य तोयं पुनः ।
पालाशैस्तरुपत्रकोमलतृणैः संशोभमाना हरिद्
वस्त्राच्छादितविग्रहेव युवतिः संलक्ष्यते सम्प्रति ॥२॥

श्रुत्वा ते स्तनितं बलाहक ! मुदा नृत्यन्त्यमी बर्हिणः
हृद्यं रावमुदाहरन्ति तृषिताः संगृह्य बिन्दूनपाम् ।
सारङ्गा निजतर्षनाशनमहो ! त्वत्तः परः को भवेत्
यः संसारपरोपकारनिरतो जह्यान्निजं जीवनम् ॥३॥

युष्माभिर्दिवि संस्थितैर्ग्रहविधू रुद्ध्वा धरित्र्यां तमो-
व्याप्त्या भीषणतां गता अपि निशाः सौदामिनीभासिताः ।
सत्यो मानवमानसेषु सुतरां मोदं क्षणं तन्यते
को वा लोकहितेरतो वितनुतेऽनिष्टं क्वचित् प्राणिनाम् ॥४॥

ग्रैष्मं तीक्ष्णसमीरणं हिममृदूकृत्वा भवान् सौख्यदः
जन्तूनाञ्च तडागपल्वलसरःस्वापः प्रपूर्याऽधुना।
संसुप्तान् खलु दर्दुरान् प्रियगिरा युङ्क्ते तथा कर्षकान्
केदारानभियातुमभ्र! सततं सज्जीकरोति ध्रुवम् ॥५॥

ग्रीष्मे लब्धबलं दिवाकरमिमं संरुध्य शक्त्या भवान्
केदारेषु कृषिप्रसक्तकृषकान् संरक्षति ह्यातपात्।
वायुप्रेरितभूरिधूलिनिचये नेदं नभो मण्डलम्
मालिन्यं भजतेऽथ वृष्टिसलिलैः स्वच्छं विधाता पुनः ॥६॥

कालो ग्रीष्मभवः प्रयाति भवति व्योम्न्यागते कष्टदः
तापश्चापि जहाति जीवनिवहान् मार्गाः जलार्द्रीकृताः।
वृद्धः सोमगुणस्तनोति शनकैः शक्तिर्वपुःषु क्रमात्
भूमिः वासवगोपसंहतियुता विद्योतते सुन्दरी ॥७॥

पातुं वारि समाकुलो मृगगणो धावन्निदाघे भृशम्
प्राप्ते खे त्वयि वारिद! प्रचुरतां लब्ध्वा जलस्याधुना।
स्वैरं तच्च निपीय शीतलधरापृष्ठे शयानः सुखी
रोमन्थं विदधाति वै तव दया मोदप्रदा कस्य न? ॥८॥

भृत्वा प्राज्यजलानि विष्णुचरणे धावन् स्थितः कुत्रचित्
मुक्त्वा तानि लघुर्भवन् गिरिशिखा आश्रित्य धूमाकृतौ।
भूत्वा त्वं जलभारवाहनभवं दूरीकरोषि श्रमम्
निर्जीवैरनुभूयते? क्व च सुखं दुःखञ्च किं भूतले ॥९॥

आदायोदकमम्बुराशितलतो भूमौ पुनः पातयन्
लोकानुग्रहवाञ्छया जलधर! स्वार्थं विना ह्यात्मनः।
सञ्चित्य द्रविणं ततो वितरथ त्यक्त्वा फलाशान्ननु
स्वं कर्तव्यमवेत्य भो! नुदसि यत् त्वं कर्मणा मानवान् ॥१०॥



# भारतीया संस्कृतिः संस्कृत-भाषा च

( ले० श्रीलक्ष्मीनारायणपुरोहितः, साहित्याचार्यः, कविकलानिधिः, उदयपुरम् )

किमपि वस्तु भवतु, तस्मिन् दोषनिराकरणपूर्वकं गुणानामुत्पादनमेव तस्य संस्कृतिर्वा संस्कारो वा संस्करणं वा कथ्यते। यावत् कस्यचिदपि वस्तुनः संस्कारो न भवति, तावत् तत् सदोषं गुणहीनमेव च तिष्ठति। संस्कारे जाते सत्येव तस्य दोषाणां दूरीकरणं गुणानामाविर्भवनं च दृश्यते। शाणे यावन्नारोप्यते, तावन्न हीरकमणेर्मृदावरणं दूरीभवति, न च तस्मिन् प्रकाश एव प्रस्फुटितो भवति, एवं न कृपाणस्य कुण्ठत्वं दूरीभवति, न च तस्मिन् छेदनशक्तिरेव प्रादुर्भवति। यदा च शाण आरोप्य तस्य संस्कारः सम्पादितो भवति, तदैव तस्य उक्तदोषा दूरीभूय वाञ्छिता गुणा आविर्भवन्ति। जडवस्तूनामिव चेतनवस्तूनां गजतुरगादीनामपि दोषनिराकरणपूर्वकं गुणोत्पादनाय संस्कार एव अपेक्ष्यते। संस्कारेणैव तेऽपि अनभीष्टां कुत्सितां गतिं त्यक्त्वा अभीष्टां विशिष्टां गतिं गृह्णन्ति। तात्पर्यमेतदेव, यत्—विश्वस्य यावन्ति वस्तूनि सन्ति, तानि समुपयोगीनि सम्पादयितुं संस्कारकरणस्यैव नितान्तमावश्यकता भवति। अन्यान्यवस्तूनीव मनुष्योऽपि उपयोगी भवितुं स्वस्य दोषाणां दूरीकरणाय गुणानामाविर्भावाय च संस्कारस्यैव अपेक्षां रक्षति, तदर्थं च तस्य संस्कार एव नितान्तमावश्यको भवति। संस्कारेण विनाऽसौ कदापि उपयोगी कार्यक्षमश्च भवितुं न शक्नोति, कदापि च कार्येषु सिद्धिं साधुवादांश्च प्राप्तुं न शक्नोति। संस्कारे जाते सत्येव सोऽपि उपयोगी कार्यक्षमश्च भवितुं शक्नोति, सिद्धिं साधुवादांश्च प्राप्तुं शक्नोति तथा च यशस्वी भूत्वा स्वकीयजीवनस्य चरमलक्ष्यपर्यन्तमपि प्राप्तुं शक्नोति।

मानवजीवनस्य सफलता धर्मार्थकाममोक्षाख्यचतुर्वर्गस्य प्राप्तावेव कथिताऽस्ति मान्यैर्महर्षिभिः। यदि कश्चित् मनुष्यो भूत्वाऽपि मनुष्योचितधर्माणां पालनं न कृतवान्, समुचितैः प्रकारैरर्थसंग्रहं च न सम्पादितवान्, अनिषिद्धकामानां (अभिलाषाणां) पूरणाय सफलतां न प्राप्तवान्, अन्ते च सांसारिकबन्धनैर्मुक्तो भूत्वा ब्रह्मप्राप्तेः समुचितान् उपायानपि नाऽवलम्बितवान्, तर्हि तस्य मानवं जन्म निष्फलमेव भवति। किन्तु उक्तधर्मादिचतुर्वर्गस्य प्राप्तिः काचित् साधारणीवार्ता नाऽस्ति। तदर्थं प्रत्येकव्यक्तीः कृते बल-बुद्धि-विद्या-विनय-शीलता-कला-कौशलादिसद्गुणगणैः सम्पन्नता अनिवार्या भवति। तदैव कश्चित् धर्मादि चतुर्वर्गं प्राप्तुं शक्नोति दोषाणां निराकरणपूर्वकः कथितानां समेषामपि सद्गुणानां प्रादुर्भावः अस्माकं भारतीयैर्वेदशास्त्रोक्तैः कर्मकलापैरेव भवितुं शक्नोति। भारतीया वेदशास्त्रविहिता कर्मकलापा एव च अस्माकं संस्कृतिः संस्करणं संस्कारो वा संस्क्रियतेऽनेनेति व्युत्पत्त्या।

ते चाऽस्माकं कृते विहिताः कर्मकलापाः कतिचित् मनुष्याणां बीजगर्भादिप्राप्तदोषाणां निराकारकाः, कतिचिच्च गुणाविर्भावनपराः, कतिचिच्च उभयविधाः। ते च गर्भाधानजातकर्मादयः उपनयनादयश्च संस्काराः मादकादिवस्तुपरित्यागादि व्रतानि, सायंप्रातर्हवनानि, त्रैविद्याख्यवेदव्रतानि, देवर्षिपितृतर्पणादि, गृहस्थावस्थायां पुत्रोत्पादनम्, पञ्चमहायज्ञाः, ज्योतिष्टोमादियज्ञादयश्च नित्यनैमित्तिकाश्च अस्माकं संस्कृतिरेव। अनयैव मानवः (पातकैः=पतनजनकैः) दोषैर्मुक्तो भूत्वा सद्गुणगणसम्पन्नश्च सन् चतुर्वर्गप्राप्तेर्योग्यो भवति। यथोक्तं महर्षिणा याज्ञवल्क्येन—"एवमेनः शमं याति बीजगर्भसमुद्भवम्।" इति महाराजेन मनुना चोक्तम्—

"गार्भैर्होमैर्जातकर्मचूडामौञ्जीनिबन्धनैः,
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते।
स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः,
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥"

वार्ताऽपीयं समीचीना, यत्—यदि उन्नतेर्बाधकानां पातकानां निराकरणं यावन्न क्रियते, तावत् चतुर्वर्गमध्यात् कस्याऽपि सिद्धिर्न भवितुं न शक्नोति। कुतो यत्—यावत् कस्मिन्नपि जने पापदोषा वर्तमानाः स्युः, तावत् तस्य पुण्यानां गुणानां च संचयने प्रवृत्तिरेव न भविष्यति। यदि कश्चित् हीरके प्रकाशं, तन्मृदावरणं दूरमकृत्वैव प्रकटयितुं तत्परो भवेत्, यदि च कृपाणे छेदनशक्तिम्, तस्य कुण्ठत्वमनपाकृत्यैव उत्पादयितुं प्रवृत्तो भवेत्, तर्हि तत् तस्य धाष्र्ट्यमात्रमेव भवेत्।

अस्माकं पूर्वजाः पूर्वोक्तैरेव वेदशास्त्रविहितैः कर्मकलापैः संस्कृतजाताः सन्ति। तेषां बल-विद्या-वर्चस्तपोयोगादीनां यानि ऊर्जस्वलान्युदाहरणानि भारतीये साहित्ये अद्याऽपि देदीप्यमानानि वर्तन्ते, तानि तेषाम् उदारतमायाः संस्कृतेरेव वरप्रदानानि सन्ति।

"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः,
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥"
"अग्रतश्चतुरो वेदाः पृष्ठतः सशरं धनुः,
इदं ब्राह्ममिदं क्षात्रं शापादपि शरादपि॥"
"नाऽहं विशङ्के सुरराजवज्रात्
न त्र्यक्षशूलान्न यमस्य दण्डात्।
नाऽग्न्यर्कसोमानिलवित्तपास्त्रा-
च्छङ्के भृशं ब्रह्मकुलापमानात्।"

इत्यादीनि सहस्रशो वाक्यानि अद्याऽपि भेरीघोषेण सह तेषां संस्कृतेरेव विजयवार्तां श्रावयन्ति। अस्माकं पूर्वजाः संस्कृत्यैव आत्मानं सर्वथा शक्तिशालिनं चतुर्वर्गसम्पादनसमर्थं च साधयन्ति स्म। संस्कृत्यैव आत्मानं सर्वथा शक्तिशालिनं चतुर्वर्गसम्पादनसमर्थं च साधयन्ति स्म। संस्कृत्यैव च ते वर्चस्वितां यशस्वितां च अर्जयन्ति स्म। एवं संस्कृत्यैव च ते जगत्यस्मिन् गौरवशालीनि पदानि प्राप्नुवन्ति स्म। संस्कृति सम्पन्नतया तेषां संकल्पे सिद्धयो न्यवसन्। संस्कृतिसम्पन्नतयैव च तेषां कामनाया अनुवर्तने निधयः स्वसौभाग्यम् अमन्यन्त एवं संस्कृतिसम्पन्नतयैव च भुवनानां भूतयस्तेषां परिग्रहस्य प्रतीक्षाम् अकुर्वन्। संस्कृतेः कारणादेव च ते सर्वभूतानां सुहृद आसन्, परोपकाराय ते आत्मोत्सर्गमप्यकुर्वन्, अन्ते च ते ब्रह्मभूता अप्यभवन्।

अद्य सा संस्कृतिः कुत्राऽस्ति? अद्य तु समाजे तस्या विलोप एव जातोऽस्ति। यथाकथंचित् यावती विद्यमानाऽस्ति, साऽपि विकृतरूपेण मुमूर्षावस्थायां च वर्तते। न हि तस्या विधिविधानेन कोऽपि सम्पर्को रक्ष्यते, न च तस्याः किमपि मूल्यमेवाऽवबुध्यते। इदमेव कारणमस्ति, यत्—संस्कृतेः प्रतीकभूतौ उपनयनं विवाहश्चेत्येतौ द्वौ संस्कारौ विहाय प्रायशोऽन्येषां संस्कृतिप्रतीकानां संस्काराणां दर्शनमेव न भवति। उपनयनमपि किमपि स्वतन्त्रसंस्काररूपेण बुध्यते। अतएव प्रायेण मातापितरः अद्य बालकस्य सुदृढ-सुशिक्षित-शीलगुणान्वितत्वस्य चिन्तामकृत्वा विवाहस्यैव चिन्तां कुर्वन्ति न तु उपनयनस्य। उपनयनस्य किं प्रयोजनं, किं वा सामर्थ्यम्, न हि एतत् ते जानन्ति, ज्ञातुं वा वाञ्छन्ति। "उपनयनं नाम आचार्यसमीपे नयनात्मको गायत्र्युपदेशप्रधानं कर्मविशेषः, किन्तु अद्येदं को मनुते? अद्य तु तस्य प्रयोजनमर्थश्च सर्वथा वैपरीत्यमवलम्बेते। अद्य बालक उपनयने सति वेदाध्ययनाय न हि, अपि तु विवाहाय अधिकारी मन्यते। सः गुरुकुले आचार्यसमीपं न हि, अपितु विवाहमण्डपे वधूसमीपं नीयते। मन्ये, सैव तस्य इतः परम् आचार्या भविष्यति, तस्याः समीप एव चाऽसौ स्त्रैणत्व — निर्बलत्व—श्रीहीनत्वादीनां परिचयं विधास्यति, दैन्य-दुःख-भ्रंशादीनां च व्रते शिक्षितो भविष्यति। यस्य बहुमूल्यस्य वयसो बल-विद्या-वर्चसामर्जनाय गुरुकुले विनियोगः क्रियते स्म, तस्यैव महार्घ्यस्य वयसोऽद्य दौर्बल्यदैन्य-दुःख-विनाशानामाह्वानाय विवाहसंस्कारस्य नामोपरि बलिदानं क्रियते। हन्त! कियद् वैपरीत्यम्!............संस्कृतेः प्रतीकानामितरेषां सन्ध्यातर्पणादि नित्यकर्मणामपि मुमूर्षावस्थाऽद्य सर्वतोऽवलोक्यते।

यदा वयं समाजस्य अस्याः सांस्कृतिकदुरवस्थायाः कारणं विचारयामः तदा तस्याः प्रमुखं कारणं संस्कृते-

महत्वेन उपयोगितया च अपरिचितत्वमेव अस्माकं विचारपथमापतति । संस्कृतेर्महत्वेन उपयोगितायां च अपरिचितत्वादेव समाजस्य तां प्रति उदासीनता अवहेलना च दृग्गोचरीभवति । किन्तु एतस्य दोषं वयं तस्मिन्नारोपयितुं न वाञ्छामः । कुतो यत्—स तु तस्या उपयोगिताविषये सर्वथा अज्ञानी वर्तते । यदि सः तस्या महत्वम् उपयोगितां च अज्ञास्यत् तर्हि तस्मिन् तां विनाशयितुं दुर्भावनाऽपि नाऽजागरिष्यत् , न च तस्यां तस्य अवहेलनाऽप्यभविष्यत् । किन्तु दोषोऽस्ति, वैदेशिकशासकानां कूटराजनीत्याः । यस्याः शिक्षणव्यवस्थाया अनुसारेणैव समाजः अद्याऽपि शिक्षितो भवति । शिक्षितो भूत्वाऽपि च सः स्वविषये सर्वथा मूर्खोऽस्ति, स्वकीयहितकरवस्तुभिरपि सः अपरिचितो वर्तते, एवं तद्विषये अहितकारित्वरूपं विरुद्धं ज्ञानमपि तस्मिन् दृढमूलं जातमस्ति । यतः प्रभृति अस्माकं शिक्षणव्यवस्था कूटनीतिकानां षड्यन्त्रचक्रे निपतितास्ति, ततः प्रभृत्येव संस्कृतभाषाया अनादरो ह्रासो विनाशश्च भवितुं लग्नाः सन्ति । ततः प्रभृत्येव चाऽस्माकं सांस्कृतिकस्य शिक्षणस्य इति श्रीरप्यापतिताऽस्ति, एवं ततः प्रभृत्येव चाऽस्माकं समाजः स्वकीयजीवनस्य सफलतायाः साधनभूते सांस्कृतिकज्ञानविषयेऽपि नितरामज्ञो जायमानो वर्तते ।

सांस्कृतिकसुव्यवस्थायै अद्य सर्वत्राऽपि संस्कृतभाषाशिक्षणप्रसारस्य नितराम् आवश्यकताऽस्ति । न्यूनातिन्यूनम् अस्माकं भारतीयानां तु एकोऽपि बालकः संस्कृतभाषया अनभिज्ञो न तिष्ठेत् यावत् अस्माकं समाजः संस्कृतज्ञो न भवति, तावत् अन्येन केनाऽपि प्रकारेण सांस्कृतिकज्ञानस्य प्रसारः, संस्कृतिश्च सुव्यवस्था भवितुं न शक्नोति । कुतोयत्—समाजस्य प्रत्येकजनः संस्काराणां पात्रं, कर्ता, कारयिता वा भवति । पात्रस्य, यस्य खलु संस्कारो विधीयते, तस्य कस्यांचिदवस्थायां मूकेसत्यपि, कर्तुर्यजमानस्य, कारयितुश्च पुरोहितोपाध्यायादिकस्य तु संस्कारकर्मकाले, मन्त्राणां ये खलु संस्कृतमया एव भवन्ति, उच्चारणम् आवश्यकमेव भवति । यदि कर्ता, कारयिता च संस्कृतस्य अनभिज्ञौ स्तः, तर्हि तौ मन्त्राणां कदाचिदपि शुद्धमुच्चारणं कर्तुं न शक्नुतः । शुद्धोच्चारणस्य अभावे सत्येव कदाचित् कदाचित् 'इन्द्रशत्रुर्वर्धस्व' इति मन्त्रभागस्येव मन्त्राणां विपरीतार्थो भूत्वा इष्टप्राप्ते स्थाने अनिष्टप्राप्तिरपि भवितुं लगति । एवंविधाया अनिष्टप्राप्तेर्वर्जनाय तस्याः कारणम् संस्कृतज्ञानाभावम् अपरिमार्ज्य संस्काराणामेव परिवर्जनं बुद्धिमत्ता नाऽस्ति । ज्वरजर्जरितो मनुष्यः, यदि अस्मात् कारणात् भेषजं परित्यजेत् , यत्—तस्य सविधि सेवनाभावे कदाचित् कश्चिद् अन्यो रोग आक्रमिष्यति, तर्हि तत् तस्य मूर्खतैव भविष्यति । आरोग्यस्येव श्रेयःप्राप्तेः उपायेष्वपि यदि सावधानतापूर्वकं परिश्रमः स्वीकरणीयो भवेत् , तर्हि तेन कस्याऽपि बुद्धिमतः तान् प्रति अरुचेः प्रकटीकरणं समुचितं नास्ति । अतएव अस्माकं समाजेनाऽपि संस्कृतेः, या खलु पुरुषार्थचतुष्टयस्य प्रापिका, वर्तते, महत्वज्ञानाय सम्पादनकौशलप्राप्तये च संस्कृताध्ययनस्य परिश्रमकष्टमपि स्वीकरणीयमेव । विना संस्कृतज्ञानेन अस्माकं समाजः संस्कृतिसम्पत्तेः प्राप्तियोग्यो न हि भवितुं शक्नोति ।

संस्कृताध्ययनस्य परिश्रमकष्टात् आत्मनो रक्षणाय संस्कृतिप्रतीकानां संस्कारादीनां कृते हिन्दीप्रभृतीनां प्राकृतभाषाणां वा स्वीकरणम् केचित् मन्यन्ते , तत् अनुचितमेव स्यात् । कुतो यत्

(१) संस्कारादीनां मन्त्रैः सह युज्यमानस्य प्रणवस्य, व्याहृतीनां,स्वाहा स्वधादि शब्दानां च हिन्द्यादिभाषासु अनुवादो न भवितुं शक्नोति ।

(२) संस्कारादीनां मन्त्राणामपि, येषां भिन्नभिन्नैराचार्यैः भिन्नभिन्नप्रकारैः अर्थाः कृताः सन्ति, एको निश्चितोऽनुवादः संस्कारादिपद्धतीनां कृते अशक्य एव ।

(३) वेदा भगवन्निःश्वसितरूपाः सनातनाश्च सन्ति, यान् महर्षयस्तीव्रैस्तपोभिः स्वयंभुवो भगवतः प्राप्तवन्तः तेषां मन्त्राः यस्यां भाषायां, यस्याम् अक्षरपरिपाट्यां, येषु च स्वरेषु विद्यमानाः सन्ति, तेष्वेव मन्त्राणां तेषां

माहात्म्यमस्ति, तेष्वेव च प्रयोगे तेषां निश्चिता अर्था भवन्तः प्रयोक्तुः अभीष्टमपि साधयन्ति।

(४) प्राकृतभाषाः उत्पद्यन्ते, विलीयन्ते च, कुतो यत्—ताः संस्कृतमिव संस्कारसम्पन्नत्वाभावात् सनातना न सन्ति, शौरसेनीमागधीपैशाची प्रभृतयः प्राकृतभाषाः, कदाचित् उत्पन्ना भूत्वा पुष्पिताः फलिताश्च जाताः, किन्तु अद्य अस्तमिताः सन्ति। पालीभाषामपि केचिद् अङ्गुलिगणिता एव जना जानन्ति। कुतो यत्—साऽपि संस्कृतमिव दृढसंस्कारयुक्तत्वाभावात् परिवर्तनशीलैव अतिष्ठत्, परिवर्तिता भवन्ती च एकस्मिन् दिने सा विनष्टाऽप्यभूत्। हिन्दीभाषाऽपि परिवर्तनशीला वर्तते। तस्या यत् स्वरूपं शताब्दीनां प्राक् आसीत्, अद्य तत् सर्वथा परिवर्तितं वर्तते। यच्च स्वरूपं अद्य वर्तते, तद् भविष्यत्यपि परिवर्तितं भविष्यत्येव। कुतोयत्—साऽपि संस्कृतमिव संस्कारसम्पन्ना नाऽस्ति, वर्तमाने च हिन्द्याः किमपि एकं स्वरूपं नाऽस्ति। हिन्दीभाषाभाषिणां प्रान्तानाम् उपप्रान्तानां च संख्याया अनुसारेण हिन्द्या विविधस्वरूपाणामपि एक महती संख्याऽस्ति। हिन्दीं अतिरिच्य वर्तमानाः वर्तमानसमये गुजराती–मराठी–तैलगू–कर्णाटकी–बङ्गला–मिथिला प्रभृतयः कतिचित् ईदृश्यो भाषाः सन्ति, यासां हिन्द्या सह सामञ्जस्यं न भवति। ताश्च स्वप्रान्ते हिन्दीवत्पुष्पिताः फलिताः सम्पन्नाश्च सन्ति। अस्यां परिस्थितौ कस्यांचिदेकस्यां भाषायाम् अनूदिताः संस्कारादिपद्धतयः इतरभाषाभाषिणां प्रान्तानां कृते अनुपयुक्ता एव भविष्यन्ति। सर्वासु भाषासु प्रान्तानुसारि पृथक् पृथक् स्वरूपासु तासां अनुवादे कृते निरर्थकमेव श्रमगौरवम् भविष्यति।

(५) परिवर्तनशीलासु वर्तमानहिन्द्यादिभाषासु अनूदिताः संस्कारादिपद्धतयः शतपञ्चाशद्वर्षानन्तरं तासां भाषाणां परिवर्तितत्वात् तत्तद्भाषाभाषिणां प्रान्तानां कृतेऽपि अनुपयुक्ता भविष्यन्ति।

(६) पाश्चात्यानुकारिणाम् उच्छृङ्खलानाम् अनुवादकानां स्वेच्छानुसारेण संस्काराणां मौलिकतत्त्वानां तन्मनोऽभिमततोटनमोटनेषु गतिषु तेषां स्वरूपाण्येव विनाशं प्राप्स्यन्ति। तादृशै रूपान्तरापन्नैः संस्काराभासैः कस्यचिद् वाञ्छितफललाभस्याऽभावे ते कदाचित् अपसारिता अपि भविष्यन्ति। एवं यदि अस्माकं समाजः संस्कृताध्ययनपरिश्रमकष्टभयेन स्वसंस्कृतेः प्रतीकान् संस्कारादिकर्मकलापान् संस्कृतभाषात एव, या तेषां सनातनी सुदृढा च आधारवेदिकाऽस्ति, च्यावयिष्यति, तर्हि पश्चात् तेषां स्थितये किमपि स्थानं न भविष्यति। हिन्द्यादिषु का अपि प्राकृतभाषास्तान् आत्मनि अवरोद्धुं शक्ता भविष्यन्ति, कुतोयत्—एतास्वेव असंस्कृतभाषासु स्खलन्तः स्खलन्तस्ते एकस्मिन्नहनि चूर्णिता भूत्वा सर्वथा विनङ्क्ष्यन्ति। नित्या नैमित्तिकाश्च वेदशास्त्रविहिताः कर्मकलापा एव अस्माकं भारतीयानां संस्कृतेः प्रमुखाः प्रतीकाः सन्ति, अस्माकं सर्वार्थलाभानां संसाधकाः सन्ति, अस्माकं जीवनं च सफलं समुन्नतं च निर्मातार एकमात्रोपायाः सन्ति। संस्कृताध्ययनश्रमात् यदि अस्माकं समाजो भीतो भवति, तर्हि तस्य इदमेव तात्पर्यम्, यत् स आत्मनः अभ्युदयात् जीवनसाफल्यादेवं च भीतो भवति, यत् सर्वथा अनुचितमस्ति।

एवं धर्मार्थकाममोक्षशास्त्राणि, दर्शनानि, इतिहासपुराणानि, धनुर्वेदगान्धर्ववेदादयः, स्थापत्यवास्तुशिल्पशास्त्रादयश्च विद्याकलानां प्रतिपादका निगमागमाः अपि अस्माकं संस्कृतेः प्रमुखानि अङ्गानि। यत एतैरपि विविधापेक्षित–विषयकाऽज्ञाननिराकरणपूर्वकज्ञानोत्पादनात्मकं संस्करणं वा, संस्कारो वा, संस्कृतिर्वा (किमप्युच्यतां,) भवत्येव। एतान्यपि संस्कृतमयान्येव सन्ति। संस्कृतस्य ज्ञानाभावे उक्तेन निगमागममयेन संस्कृतसाहित्येन या खलु अज्ञानरूपदोषनिराकरणपूर्वकज्ञानरूपगुणोत्पादनात्मिका भारतीयसमाजस्य संस्कृतिः, भवितुं शक्नोति, तयाऽसौ वञ्चित एव तिष्ठेत्।

यदि कोऽपि स्वकीयं जीवनं सफलं अभ्युन्नतं च निर्मातुं वाञ्छति, तर्हि तेन स्वकीय भारतीय संस्कृतेः सविधि स्वागतं करणीयं, एवं तस्या माहात्म्यज्ञानाय, स्वरूपबोधाय, संप्राप्तये च संस्कृताध्ययनपरिश्रमकष्ट-

स्याऽपि सहर्षमभिनन्दनं करणीयम् । संस्कृतज्ञाने जाते सत्येव कश्चिदपि संस्कृतनिष्ठां स्वकीयां भारतीयां संस्कृतिं ज्ञातुं प्राप्तुं च शक्ष्यति । संस्कृतिसम्पन्नतायाः प्राप्तौ सत्यामेव च कश्चदपि निर्दोषो गुणवांश्च भवन् धर्मार्थ-काममोक्षात्मकचतुर्वर्गं प्राप्तुं शक्ष्यति, यद्धि स्वकीय-मानवजीवनस्य सफलताया एकमात्रं प्रयोजकमस्ति ।✱

# खट्टरकाकाः

( ले० श्री हरिमोहनझा महाभागाः, अनुवादकः—विद्याभूषण श्रीगणेशरामशर्मा, झालावाडः )

तद्दिने खट्टरकाकामहाशयैः साकं प्राचीनसंस्कृति-विषये वार्तालापः प्रावर्तत ।

मयोक्तम्—दृश्यताम्, खट्टरकाका । तत्कालीना ऋषि-मुनयः कीदृक् त्यागपूर्णं जीवनं व्यत्ययायन्ति स्म ! गुहासु कन्दरासु च वसतिं प्रकल्प्य, कन्दमूलानि च भक्षयित्वा तपश्चरन्ति स्म । ब्राह्मे मुहूर्ते समुत्थाय, नदी-तटाकादिषु तीर्थेषु स्नात्वा, कमण्डलुं जलेनापूर्य, कुशा-सने उपविश्य, भगवन्तं परमेश्वरं ध्यायन्ति स्म ! कीदृशं सात्त्विकं पवित्रं च जीवनमासीत् ! अद्यत्वेऽपि च श्मश्रुकूर्चान् काषायवस्त्राणि च दृष्ट्वा मनसि मम श्रद्धा-तिरेको लालसीति ।

श्रुत्वैतत् खट्टरकाका शृङ्गापत्राणि परिमार्जयन्तः प्रोचुः—अये, तदानीं वने रोमशत्रवो नापिताः सुलभा न बभूवुः, अतः श्मश्रूणि, रजको नोपलभ्यते स्म, अतः काषायवस्त्राणि, तैलाभावे जटाः, वस्त्राभावे वल्कलानि, अन्नाभावे कन्दमूलानि, तेषामप्यभावे एकाशनमथवोप-वासः, धातुपात्रस्याभावे कमण्डलुना जलं पपुः । स्था-लीनामभावे पत्रावलीषु पाणितले वा भोजनं चक्रुः । नैतत्सर्वं त्यागसूचकम्, वरं चाभावसूचवम् । 'अप्राप्ति-स्तत्र कारणम् !'

अहम्—परन्तु……

खट्टरकाका—परन्तु किम् ? यदि ते पूलिकाः कचौ-रीश्चासादयिष्यन् तदा किमर्थं पपीता, कदलीफलानि वा-न्वैष्यन् ? यदि संयावकान्याप्स्यन् तदा ते किमर्थमौदु-म्बरफलान्यत्रोटयिष्यन् ?? कलाकन्दमासादष्यन् ??? तदा वटहलं कस्मादपृच्छ्यन ??? गृहे कुण्डलिका अलप्स्यन्त तर्हि जम्बूफलानामन्वेषणं किमर्थमकरिष्यन् ??? अमृत-पक्वान्नममिलिष्यत्तदामृतफलेभ्यः कुतोऽस्पृहयिष्यन् ??? यदि स्वगृहे खर्जूरीफलानि शृङ्गाटादीनि च सुलभान्य-भविष्यन् तदा ते किमर्थं वन्यखर्जूरीफलैरुदरपूरणम-करिष्यन् ???

अहम्—खट्टरकाकाः ! ते वीतरागा बभूवुः । ते स्वाकाङ्क्षा जिग्युः ।

खट्टरकाकाः—नाहमेतन्मन्ये । तेऽपि च नोऽल्पाल्पं रसिका आसन् । पुष्पोपहारैर्विना न तेषां कार्यनिर्वाह एव भवति स्म । ते 'स्नो-पाउडर' स्थाने चन्दनभस्मालेपं कुर्वन्तिस्म । 'बेल्ट' स्थाने मुञ्जरज्जुरशनां परिदधेते स्म । स्वकीयामलङ्काररुचिं ते तुलसीरुद्राक्षमालाभिः पर्यतर्पयन् कौशेयरुचिं ते मृगचर्मणातर्पयन् । अये, युगं परिवर्तते, फैशनं परिवर्तते, परन्तु मनुष्यस्य मूलवासना नैव परिवर्तते ।

अहम्—तद्युगीना संस्कृतिरेवान्या बभूव ।

खट्टरकाकाः—अयि भोः ! तदानीं सर्वतोऽरण्यानि—महावनानि—एवासन् । तदा समये वन्यसभ्यतानुरूपाणि यानि यानि च वस्तूनि भवितुमर्हन्ति, तानि सर्वाणि बभूवुः । मृगाजिनं, व्याघ्रचर्म, कुशासनं, धूपश्चन्दनं, मधु, चामरं भोजपत्रं च । अधुनापि यदि द्वापरयुगीनं दृश्यावलोकनमभीष्टं भवेत्तदा झारखण्डप्रान्तं गत्वा दृश्यताम् । तान्येव धनूंषि, त एव बाणास्त एव मयूर-पक्षाः सैव वंशी, सा चैकवस्त्रा नारी । यदि चाद्यत्वे सर्वाणि क्षौरगृहाणि, सौचिकानामापणाः, वस्त्रप्रक्षालन-गृहाः वस्त्रोत्पादनशालाश्च समाप्तिं गच्छेयुस्तर्हि पुन-

स्त्रेतायुगस्य दृश्यमुपस्थितं स्यात् । विलासितायाः स्रोतांसि निरुध्यन्तां, सर्वतो मुनय एव दरीदृश्येरन् ।

अहम्—ते कीदृक् कठिनं तपस्तेपुः ।

खट्टरकाकाः—अयि भोः । ते वृथैव तपस्यां नाचेरुः ! उदरभरणस्य समस्या ह्नत तपसे प्रणोदति–प्रेरयति । तच्च पुनस्तपो हस्तपादं सञ्चाल्य भवेद्वा घण्टानादं ध्वनयित्वा वा स्यात् , खनित्रमुद्यम्य वा भवेद्वा नासिकां गृहीत्वा वा स्यात् , पाषाणं खण्डशो विधाय भवेद्वा पाषाणं सम्पूज्य वा स्यात् ।

अहम्—खट्टरकाकाः ! ते केवलमेकमेव हि कौशेयवस्त्रं परिदधानाः शीतमतिवाहयन्तिस्म । अप्येतन्नाम साधारणी वार्ता ?

खट्टरकाकाः—अथाधुनातनी नवोढा युवतिस्ततोऽप्यतितरां प्रतनुतारेण कौशेयेन लीलया शीतयुद्धं जयति, अपि नाम सैषा न्यूनतरा तपस्विनी ? प्रदर्शनानुरोधात् फैशनापेक्षया वा यत् कष्टं विषह्यते, न तत् कष्टमपि कष्टमिव प्रतीयते ।

अहम्—खट्टरकाकाः, ते नन्वग्निहोत्रिणो बभूवुः ।

खट्टरकाका ईषन्मन्दस्मितं कृत्वा बभणुः—शीतत्राणार्थं केवलमुपायद्वय्यद्वयी । 'हसन्ती वा हसन्ती वा हसन्ती वामलोचना' तदानीमपरा दुर्लभैवाभूत् । एवं सति ते लोका दिवानिशमग्न्याधानं कृत्वा निर्वाहं चक्रिरे । तस्मादेव हि तैस्तैः पञ्चाग्निसाधनस्यैतावन्महत्त्वमाघोषितम् ।

अहम्—खट्टरकाकाः, ते लोकानन्वध्यात्मदृष्ट्याग्निहोत्रमाचेरुः ।

खट्टरकाकाः साट्टहासं जहसुः । अहमपृच्छम्—किमर्थं भवन्तोऽहसन् ?

खट्टरकाकाः भङ्गापत्राणि जलेनार्द्राणि कुर्वन्तोऽब्रुवन्—

एतज्ज्ञातुमतीव प्राक्कालीनेतिवृत्तयुगे गन्तव्यं स्यात् अमा, प्राग्वैदिकं युगमालोडयितव्यं भवेत् । श्रूयताम्, अस्माकं पूर्वजा आदौ, अग्ने रहस्यं न विविदुः । दावानलं वाकाशे विस्फूर्जन्तीं विद्युद्वल्लीं वाभिवीक्ष्य ते चकितचकिता विभ्रान्ताः साश्चर्याश्च बभूवुः । यदृच्छया संयोगाज्ज्ञातवन्तो यद्धि घर्षणादग्निरुत्पादयितुं शक्यत इति । तामिमां विद्यामासाद्यैव ते खल्वानन्दोत्फुल्लहृदया हर्षातिरेकतो जहसुर्ननृतुश्च । पुरा तेऽपक्वं मांसं बुभुजुः, अधुना तत्परिपच्यात्तुमारेभिरे । जीवितमांसे मृतमांसे द्वयोरपि ते कमप्यपूर्वमास्वादमापुः । अतस्तेऽग्निं 'आमाद', 'क्रव्याद' च सम्बोध्य—सम्बोध्य तं स्तोतुमुपचक्रिरे । पुरा तेऽपक्वानेव यवतिलान् भक्षयामासुः । इदानीमग्नौ परिपच्य गोधूमांश्चणकांश्च भक्षितुमारेभिरे । पुरोडाशमसाधयन् । प्राक् शीतर्तौ चकम्पिरे, अधुनाग्नितापसेवनस्यानन्दः सुलभो बभूव । प्राक् रात्रावन्धकारभयादात्मानं संगोप्य ररक्षुरिदानीं प्रकाशे सर्वमपि प्रत्यक्षमदृश्यत । 'तमसो मा ज्योतिर्गमय' सेयं प्रार्थना फलवती बभूव । अग्निज्वालामालोक्य वन्याः श्वापदा विभ्रान्ताः सन्तो दूरं पलायांचक्रुः । त इमे लोका अग्निं प्रज्वाल्याकुतोभयं निश्चिन्तं शयिमारेभिरे । यदाग्निदेवेनैतावन्त उपकारा बभूवुस्तदा कथं न ते तद्गुणानगास्यन् ? अतएव हि तैः कृतैरग्निदेवस्य गुणगानैः परिपूरितोऽस्ति वेदः ।

अग्निमीळे पुरोहितम्........

अहम्—परन्तु हवनविधानम्......

खट्टरकाकाः प्रोचुः—दृश्यताम् , अग्नेराविष्कारादस्मत्पूर्वजानां हस्ते किलैका महती शक्तिः समाजगाम । परं त्वग्नेः प्रज्वालनार्थं ते महान्तं परिश्रमं कर्तुं विवशा अभूवन् । सुदीर्घं कालं यावदश्मघर्षणं वा काष्ठमन्थनं वा कर्तव्यम् भवति स्म । तदा महता काठिन्येनैकोऽग्निकणस्फुलिंगः कथमपि प्रादुर्भवति स्म । सैषा स्थितिरासीत्तदानीम् । अतएवेमे लोका महद्भिः प्रयत्नशतैरग्निरक्षणाय तत्परतामवालम्बिरे । 'न कदाचिदसौ प्रज्वलितोऽप्यग्निर्निर्वाणं व्रजेत् !' इत्याशङ्कया घृतं समिधश्च भूयोभूयः प्रक्षिप्य तमग्निं प्रज्वलन्तं ररक्षुः । एतदेवाग्निहोत्रस्य रहस्यम् । अहम्—आम्,

एवम्, ज्ञातं मया ! तस्मादेव हि हेतोर्यज्ञस्यैतावन्महत्त्वमास्ते ?

खट्टरकाका अङ्गापत्राणि जलार्द्राणि कृत्वा कुण्डे न्यदधत। पुनस्तानि पाषाणेन निर्दलयन्तोऽवोचन्—अपि ते नेदानीं काचित्त्वरा शीघ्रता वास्ते ?··· तदा पुनः श्रूयताम्। अस्माकं पूर्वजाः पाषाणैः परिवार्य 'अश्मव्रजं' विदधिरे। तन्मध्ये मृत्तिकया चत्वरो न्यधीयत। तदुपरि समित् (सिल्ली) न्यधीयत। वर्षातोऽग्नेः संरक्षणार्थं तदुपरि तृणानां कटान्याच्छादयन्। तन्मण्डपे निषण्णास्तेऽग्निं परिचेरुः। होतृगणा आहुतीः प्रायच्छन्। उद्गातारो हि गीतानि गायन्तः प्रोत्साहवर्द्धनं चक्रुः। ब्रह्मा तत्रोपविश्य निरीक्षणं चकार। सर्वेषामेव कर्तव्यकर्माणि यथायथं विभाजितान्यासन्। कश्चित् समिध आजहार, कश्चन्मृदा 'शमिता-प्रणिता' पात्राणि रचयितुं नियुक्त आसीत्। 'शमिता'—निर्मातारो लोका मांसमुत्कृत्योत्कृत्याग्नौ परिपचन्ति स्म। बालिका अजाश्चादुहन्, अतएव हि ता 'दुहितरो'ऽभ्यधीयन्त। सोमलतामवच्छिद्य खण्डशः कृत्वा निष्पेष्य च रसो निष्पाद्यते स्म। महावेदीमध्यानीना लोकास्तं रसं पपुः दुग्धस्य, दध्नो, घृतस्य, मांसस्य तथा परिपक्वस्यान्नस्य च संग्रहो महान् सम्पद्यते स्म। सर्वादावग्निदेवाय 'हविः' समर्प्य ततो 'हुतशेषं' व्यतीर्यत। नानाविधा रङ्गविरङ्गा। भूरिभोगाः प्रावर्तन्त। यदि मन्येत चेत्, तदा स मनुष्यजातेः सर्वप्रथमं गोष्ठीगृहं (क्लब) आसीत्। यत्र सर्वेऽपि लोका एकत्र समवेत्यान्नं पानं च कुर्वाणा आनन्दमनुभवन्तो जगुर्जहसुर्ननृतुश्च 'संगच्छध्वम्, संवदध्वम्, सं वो मनांसि जानताम्'। सहनाववतु, सह नौ भुनक्तु, सहवीर्यं करवावहै।

अहम्—खट्टरकाका ! तेषां जीवनस्य लक्ष्यं किमासीत् ?

खट्टरकाका—तत्तु वेदमन्त्रैरेव ज्ञातव्यं भवति, जीवेम शरदः शतम्, पश्येम शरदः शतम्, शृणुयाम शरदः शतम् अर्थात् वर्षाणां जीवाम, शतं वर्षाणां पश्याम, शतं वर्षाणां शृणुयाम, शतं वर्षाणामानन्दं चानुभवाम। धनधान्यानां सन्ततेश्च वृद्धिर्भूयात्। यथाकालं मेघा वर्षन्तु। बह्वन्नं समुत्पद्यताम्। गावः प्रभूतं दुग्धं प्रयच्छन्तु। वृषभाश्चिरांय हलं कर्षन्तु। वृक्षाः प्रभूतं फलन्तु। कन्दमूलानि सुलभानि सन्तु। इति। अद्युनापर्यन्तं सदूर्वाक्षतमाशीर्वादप्रदाने तानीमानि सर्वाणि लक्ष्याणि समुच्चार्यन्ते। दोग्ध्री धेनुः, वोढा अनड्वान्········ निकामे निकामे नः पर्जन्योऽभिवर्षतु फलवत्यो न ओषधयः पच्यन्ताम्········।

अहम्—खट्टरकाका ! दूर्वाक्षतस्य कोऽभिप्रायः ?

खट्टरकाकाः—अये, स्वभोजनायाक्षताः पशूनां कृते च दूर्वा, ताविमौ द्वावपि हृदार्थौ पर्याप्तं भवेताम्। अयमेव हि दूर्वाक्षतस्याभिप्रायः। इदानीमपि मिथिलाप्रान्ते जामात्रा 'घसकट्टी' इत्यस्य संस्कारस्य विधिः सम्पाद्यते। तदेतत् तस्या एव परम्परायाः परिपालनमास्ते। तेषु दिवसेषु यथाउलूखले 'सोमं' निष्पीडयन्ति स्म तथैवाद्यापि च विवाहे धान्यकण्डनसंस्कारो विधीयते, प्राग्निवाग्निं परितः प्रदाक्षणाविधानं भवति। इमाः सर्वाः प्रथास्तद्युगस्यैव वरदानम्।

अहम्—खट्टरकाका ! तेषां लोकानां जीवनं कीदृशमानन्दमयमासीत् ?

खट्टरकाकाः—बाढम्, वैदिके युगे जनाः सरसाः सहृदया दिनेदिन आनन्दिनश्च बभूवुः ! 'यावज्जीवेत्, सुखं जीवेत् !' इत्यामीत्तेषां जीवनदर्शनम् !! परन्तूपनिषत्कालीना महर्षयो मन्दा निरुत्साहा निष्पेदिरे। ईदृशोहतभाग्या आसंस्ते यत्तै रिन्द्रियैः सहमहायुद्धमुद्घोषितम् ! अरे, एतत् मतं, यदिन्द्रियाणि खल्वश्वसदृक्षाणि सन्ति नाम नूनम् (इन्द्रियाणि हयानाहुः), एवं सति किमश्वा हन्तव्याः ? तथा कृते रथः कथं गतिशीलः स्यात् ? प्रग्रहैरेव हस्तधृतैः किं फलं सम्पत्स्यते ? स्मृतिकाराश्चापि प्रादुर्बभूवुः परं ते केवलं वल्गाहस्ता एव। एभिः स्मृतिकारैर्यद्वस्तु स्वयं जीर्णतां नेतुं नाशक्यत, तदेव निषिद्धमुद्घोष्य प्रख्यापयितुं चेष्टितम्। तस्मादेव तैरेतैर्लशुन-

pलाण्डुसदृशेभ्यः पदार्थेभ्यो गालीप्रदानमारब्धम् ते मांसं त्याज्यमवोचुः स्त्रियं च विनिन्दितुमारेभिरे ।

अहम्—किमर्थमेतदीदृशम्, खट्टरकाका: !

खट्टरकाका:—अये, अस्य सुस्पष्टं कारणमेतदासीद्यदसमर्थतया तेषां कृते जीवनोपयोगिनोऽनेके पदार्थाः सुलभा नाभूवन् । यद्वस्तु तैः स्वयं न प्राप्यते तदुपयोगमन्योऽपि च किमर्थं करोतु ? सेयमीर्ष्यैव निवृत्तिमार्गस्य मूलम् । किं न पश्यसि, अधुनापि ये पण्डिताः संग्रहिणीरोगग्रस्ता भवन्ति, ते स्वान्तेवासिभ्यः सन्धितभक्षणं नानुमन्यन्त इति !

अहम्—खट्टरकाकाः, तेऽजानन् यल्लोकानामत्रैव कुशलमस्तीति । —क्रमशः



# वेदस्य सर्वविद्यानिधानत्वम्

मान्याः श्रीमोतीलालशर्माणः, मानवाश्रमः, दुर्गापुरा

पूर्वानुवृत्तम्—

"अस्माकं विज्ञानं, अस्माकं विज्ञानं, वयं वैज्ञानिकाः, अहो वैज्ञानिकी चमत्कृतिः' इत्येवमहर्निशं डिण्डिमघोषं कुर्वतां प्रतीच्य-वैज्ञानिकानां स्वविज्ञानस्य श्राद्धेतिकर्त्तव्यता यत्र भूतमये वाक्प्रपञ्चे परिसमाप्ता दृश्यते, तत्रास्माकं विज्ञानं वाक्प्रपञ्चाधिष्ठातारं प्राणं प्राणाधारं मनः, तदाधारं विज्ञानकोशं, सर्वाधारमानन्दं, सर्वान्ते चाखण्डतत्त्वमित्थमनेकधा विभक्तमिति तदपेक्षया का कथा भौतिकविज्ञानमात्रैकशरणानां क्षणिकभूतविज्ञानवादिनां पाश्चात्यानाम् ।

"न च भारतीयविज्ञाने-टेलीफोन-वायरलेसटेलिग्राफी-रेलवे—बेलून-फोनोग्राफ-रजतपटेत्यादीनां, अद्भुताविष्काराणां कुत्रापि किञ्चिदपि निदर्शनं न विद्यते । भारतीयानां सर्वाणि शिल्पजातानि यथाजातानां साधारणानां सामान्यमनुष्याणां सामान्या कृतिरेवेति स्पष्टमेव पाश्चात्य-पूर्वीय-विज्ञानतुलनायां पूर्वीयविज्ञानस्यापूर्णत्वं, लोकाभ्युदयशून्यत्वं, अतएव निःसारत्वमिति वाच्यम् । सर्वेषु युगेषु समानजातीयानामेकाकारवतामाविष्काराणामेव सत्ताया अभावात्, वर्त्तमानयुगेऽपि उत्तरोत्तरभाविनामाविष्काराणामपेक्षया पूर्वपूर्वयुगे आविष्कृतानामाविष्काराणां नैरर्थक्यस्य यथापूर्वं विद्यमानत्वेनादोषात् । मास्तु वैदिकयुगे वायरलेसटेलिग्राफी, नासन् तदानींयुगे धूम्रशकट्यः, नैवासीदर्थशोषको रजतपटस्तदानीम् । नैव चाभवन् पुरुषार्थविनाशकान्यन्यानि वाहनानि कलहोत्पादकानि, शान्तिभङ्गकराणि च । ततः किं निश्छन्नम् । भीषणेऽस्मिन्नाविष्कारयुगे वैज्ञानिकैः किं लब्धम् ? ! अर्थसम्पत्तिर्लौकवैभवम्—साम्राज्यमिति चेत् । सम्पत्त्या किं क्रियते ? सुखोपभोग इति चेत्-का तर्हि सुखदुःखमीमांसा ? पशुवद्यदीन्द्रियारामत्वमेवसुखमिति चेत्—त एव सुखिनः शपथपुरःसरं प्रष्टव्याः—किं नु सुखिनो भवन्त इति । ये आविष्काराः शान्तिरक्षकाः, लोकाभ्युदयपूर्वकमात्माभ्युदयहेतुभूता वा स्युस्त एवाविष्काराः । अन्ये तु क्षणिकसुखे उपयुक्ता अपि परमार्थतः—अशान्तेरेवोत्पादकाः सन्तो दूरत एव त्याज्याः । यथा यथा आविष्काराः प्रवर्द्धन्ते, तथा तथा आशान्तेर्दावानलः परिवृद्धो दृश्यते तत्र तत्र राष्ट्रेष्विति नाविदितं सामयिकतन्त्रप्रेक्षकाणाम् ।

वस्तुतस्तु वैदिकयुगेऽपि तादृशा आविष्कारा अवश्यमेव विद्यन्तेस्मेति निःसंदिग्धं ब्रूमः । आविष्काराणां स्वरूपाणि तु काले काले परिवर्तनशीलानीत्युक्तमेव प्राक्तदा बहुधाविभक्तेषु तेष्वत्र निदर्शनार्थं कानिचिदेवोदाहरणानि प्रस्तूयन्ते ।

श्रूयते हि ऋग्वेदश्रुतौ—यत् त्वष्टनामकेन केनचित् स्वर्गीयरथकारेण देवविशेषेण सोमपानायेन्द्रार्थं दारुमयमेकं चमसं निर्मितमासीत् । तदिदं पानसाधनपात्रं दारुमयं सत् पानकाले सद्यश्चतुर्द्धा विभक्तं भवति स्मेति महदाश्चर्य्यम् । तस्यैतस्य महाशिल्पिनस्त्रयः

# इतिहासात् किं शिक्षिष्यामहे किञ्चित् ?

मूललेखकः—श्री ड० के० आपटेमहोदयः
अनुवादकः—दीनानाथत्रिवेदी 'पधुपः' जयपुरम्

५० पञ्चाशद्वर्षमितो व्यत्यगात् स कालः, यत्र केनचिद् वाङ्गसज्जनेन प्रस्तावोऽयं रचित आसीद् यत्—"वङ्गभाषायै देवनागरलिप्याः प्रयोगः कर्तव्यः' इति । परं वङ्गीया अन्ये विद्वांसोऽबिभयुः—यदेवंकरणेन वङ्गभाषाया अस्तित्त्वमेव विनश्येदिति । तावत्पर्यन्तं वङ्गपुस्तकेषु संस्कृतश्लोकानामुद्धरणमक्रियत, तदा तेषां देवनागरलिप्यामेव लेखनस्यासीत् प्रथा । तदनन्तरं संस्कृतस्य ग्रन्था अपि वङ्गलिप्यां प्राकाश्यं लभमाना अभूवन् । अद्यत्वे वङ्गीयेषु देवनागरलिपिज्ञानां जनानां संख्या नाल्पीयसी ।

## अदूरदर्शिता

अधुनैतावद्वर्षानन्तरं परिस्थितिं पर्यालोचयद्भिरस्माभिरेतद्वक्तुं शक्यते यत्—देवनागरलिपिमस्वीकुर्वद्भिस्तदानीन्तनैर्वङ्गीयैर्विद्वद्भिर्दूरदर्शितया कार्यं नानुष्ठितमिति । देवनागरलिप्याः स्वीकारेण मराठीभाषायाः

---

शिष्या अभूवन्—ऋभुः, विभ्वा, वाजश्च । ते चैते त्रयोऽपि भारतीयाः सुधन्वेत्याख्यस्य नृपतेः पुत्राः क्षत्रियवंशजाः सन्तोऽपि शिल्पविद्यायां निपुणतमा आसन् । निजकलानैपुण्याभिमानतस्त एते देवचमसनिर्म्मातारं स्वगुरुं त्वष्टारं प्रति–आक्षेपं–चक्रुः । नात्र चमसनिर्म्माणसम्बन्धे त्वष्टुः काचिद्विशेषता, अपितु तद्वैशिष्ट्यं तदारम्भकस्य दारुखण्डस्यैवेति तैरुक्तम् । इत्थं मनुष्यलोकनिवासिभिरेतैर्मनुष्यैः कृतां देवलोकस्थदेवविशेषस्य त्वष्टुर्निन्दां श्रुत्वा भारतवर्षस्य शवसोनपात्—अधिष्ठाता अग्निस्तान् प्रत्युवाच–मैवं वदत । त्वष्टा खलु देवलोकनिवासी देवशिल्पी, भवन्तस्तु भूलोकनिवासिनो मानवाः । त्वष्टुर्देवस्य निन्दापराधाभियोगेनाभियुक्ता भवन्तो दण्डभाज इति यदि दण्डप्रतीकारमपेक्ष्यते भवद्भिस्तदा तु चमसकृतं किञ्चिदुत्कृष्टतरं शिल्पं विधाय स्वर्गाध्यक्षस्येन्द्रस्य परितोषो विधीयताम् । तत एवापराधमुक्ता भविष्यन्ति भवन्त इति । तदित्थमग्निना भर्त्सितास्त एते चतुरशिल्पिनस्तदानींयुगे—आश्चर्य्योत्पादकानि नानाविधानि शिल्पानि रचयामासुः । इन्द्रार्थं धातुमयौ संश्लिष्टौ हरितवर्णौ द्वौ–हयौ, पृथिव्यां दिवि च समानरूपेण प्रचारिणौ निर्मितवन्तः । एतयोर्हर्य्यश्वयोः सम्बन्धादेव तदानीन्तनः स्वर्गाध्यक्षो मानुषेन्द्रो हरिवाहननाम्ना प्रसिद्धोऽभूत् । एवमेवाग्नये धातुमयो रोहिताश्वः सवित्रे श्यावाश्वः वायवे नियुताश्वः उषसे–अरुणयो गावः, बृहस्पतये क्षणे क्षणे प्रतिक्षणं विविधवर्णेषु परिवर्तनशीला धातुमयी विश्वरूपाख्या गौः, रासभयुग्मं नासत्यदस्राभ्यां, पूष्णे–अजा, मरुद्भ्यः पृषदश्वः, सूर्याय हरिदश्वः, इत्येतानि देवताभेदेन तैस्तैर्देवैरादिष्टान्यतएव ऋक्संहितायामादिष्टोपयोगानीत्येवं प्रसिद्धानि पृथक् पृथक्दशविधानि शिल्पानि निर्म्मापयद्भिस्तैः स्वकीर्तिर्भौमत्रैलोक्ये प्रसारिता । स्वेच्छया चैकमपूर्वं चमसं, अश्वविरहितं दिवि च भुवि चाव्याहतगतिं, त्रिचक्रमुक्थ्यनामकं रथं, तृणादिनिगरणेन सदा दुग्धमेव दुग्धवतीमेकां सप्तधातुमयीं कामगवीमित्येतान्ययानिं-अद्भुतानि शिल्पानि निर्म्माय त एते मनुष्यलोकनिवासिनो मनुष्या अपि देवेन्द्रहरिवाहनकृपाभाजनाः सन्तः स्वर्गीया देवाः सञ्जाताः । इन्द्रसग्धौ ( सहभोजने ) सम्मिलिता एते सोमपानेनाभिनन्दिता इन्द्रेण । तत्रैव च सुधर्म्माभिधायां देवसभायां देवसभाविद्वान्–औतथ्यो ममतापुत्रो महर्षिर्दीर्घतमा इन्द्रनिदेशात् कीर्त्तिसूक्तेन एतानभिनन्दयामासेति स्पष्टं ऋग्वेदस्य प्रथममण्डले तेषु तेषु सूक्तविशेषेषु । विशेषजिज्ञासुभिस्तु श्रीगुरुचरणैः प्रकटितः–इन्द्रविजयाख्यो ग्रन्थो द्रष्टव्यः । —क्रमशः

लिपिः कामं पश्चात्पदाऽभवत्, परं मराठीभाषायाः प्रगतिरवरुद्धा जाता' इति नाऽनुभूयते। इदानीन्तु गुजराती-राज्यनिर्माणानन्तरं गुजरातीभाषाया देवनागरलिप्यां लेखनं मुद्रापणं च भवेत्—इत्येष कुतोऽस्ति निर्णयः।

वङ्गभाषाविषये चैका वार्ताऽन्याऽप्यस्ति—यदि तदानीं वङ्गभाषायै देवनागरलिप्याः पूर्णतया स्वीकारोऽकरिष्यत तदाऽऽधिक्येन सम्भवस्त्वयमेव यद् वङ्गभाषाभिज्ञानां वङ्गभाषाभाषिणाञ्च संख्याऽद्य द्वादशकोटितो न्यूना नाऽभविष्यत्, तत्फलस्वरूपे च राष्ट्रभाषाया अथवा राज्यभाषाया रूपे सैव स्वीकृताऽभविष्यत्, यतो हि भाषाभाषिणां सर्वाधिकया संख्यया सह सर्वश्रेष्ठस्य विपुलस्य च साहित्यस्यापि लाभस्तन्निर्णयानुसारेण राष्ट्रस्याऽभविष्यत्। वङ्गभाषाध्यायिनामवङ्गीयानां जनानां संख्याऽद्य लक्षावधिर्वर्तते। सौभाग्यञ्चेदं कयाचिदप्यन्यया भारतीयभाषया न लब्धम्। हिन्दीभाषाध्यायिनोऽहिन्दीभाषाभाषिणो जना अवश्यं संख्यायां सन्ति कोटिशः। परं तत्रास्ति कारणान्तरमपि। हिन्दीसाहित्यस्य विशालतायाः समृद्धेः सामर्थ्यस्य च कारणात् हिन्दीभाषाध्यायी अहिन्दीभाषाभाषी मनुष्यः कश्चन विरल एव।

## अधुनापि देयं ध्यानम्

विशालराष्ट्रस्य तुलनायां सङ्कीर्णप्रान्तीयतायाः प्रलोभने नियतनस्य या त्रुटिस्तदानीं कृता, तस्याऽधुना तु मनाक् संशोधनं कर्तव्यम्। इदानीमपि वयं सावधाना भवेम, दूरदर्शितया च कार्यं कुर्याम तर्हि राष्ट्रस्य महत् कल्याणं सम्भवेत्।

विगते १९०५ तमवर्षीयसमये वर्तमानयुगे च किमप्यन्तरमवश्यमागतं वर्तते। तदानीमासीत् राष्ट्रभावना प्रखरा। उन्नततमाः प्रेरणाः सर्वत्र कुर्वन्ति स्म कार्याणि। व्यवहारस्योत्तरदायित्वं नासीदस्माकं स्कन्धेषु। अस्यां परिस्थितौ देवनागर-लिपिस्वीकारस्य प्रस्तावः सम्मुखमायात आसीत्। अद्याऽऽदर्शवादस्य व्यवहारेण सह समन्वयो भवेत्, राष्ट्रस्य चोत्कर्षः सिध्येत्—इति दायित्वमस्माकं स्कन्धेषु समापतितम्। अद्य वयं चतुष्पथे तिष्ठाम इव। भारतं यथापूर्वं समर्थं प्रतिष्ठितं च जीवनं प्राप्तुं, संसारस्य गुरुत्वं च सम्पादयितुं गच्छदस्ति। अथवा नव्ययुगस्य चाकचक्ये निपत्य परकीयजीवनप्रणालीमङ्गीकृत्य, मिथः कलहं कृत्वाऽवनतिपथमनुसरत्, जगति तृतीयकक्षायाश्चतुर्थकक्षाया वैको देशो भवितुं याति। एतन्निर्णयस्तु अद्यतनीनेनाऽस्माकं नीतेर्निर्धारणेन प्राकट्यमवाप्स्यति।

प्राचीनां श्रेष्ठतां यदि वयं तुच्छां कल्पनाप्रसूताञ्च न मन्यामहे तर्हि सर्वप्रकारेणाऽस्माभिः प्रयत्नमनुतिष्ठद्भिर्देवनागरलिप्या सह राष्ट्रस्याऽऽत्मनः आविष्कारो यत्र पूर्णतया समभूत्—साऽमरवाणी संस्कृतभाषाऽपि अवश्यं स्वीकर्तव्या भविष्यति। संस्कृताध्ययनस्य प्रचलितायां प्रणाल्यां समुचितं परिवर्तनं विधाय तच्छिक्षाया अनिवार्यत्वं करणीयम्, पुरा यत्र संस्कृताऽनभिज्ञा जनाः सुसंस्कृताः प्रायो न परिगण्यन्ते स्म, तादृगेव युगः सम्प्रति पुनः प्रत्यावर्तनीयश्च भविष्यति।

## विपरीता परिस्थितिः

परमद्य यद्दृश्यमुपस्थितं वर्तते तत्सर्वं पूर्णतया विपरीतमस्ति। अद्य भाषाप्रान्तसम्प्रदायादीनां पंके रसमनुभवन्तो महान्तो महान्तो जना दरीदृश्यन्ते। यदातो हिन्दी राज्यभाषारूपे स्वीकृता जाता, तदा प्रभृत्येव हिन्द्यास्तथा हिन्दीभिन्नानां भाषाणाञ्च मिथः सुमहान् सङ्घर्षः प्रचलन् वर्तते।

एकतो हिन्दीभाषिजनताया मुखात्—हिन्दीसाम्राज्यस्य विस्तारस्य चर्चा श्रूयते। कदापि केनापि—अहिन्दीभाषिणा जनेन संस्कृतस्य समर्थनं कृतं भवेत्, तदा तस्मिन् आरोपः क्रियते—यत् संस्कृते भक्तिमनुदर्शयन्नयं दुर्जनो हिन्दीविषयेऽरुचिं विद्वेषञ्चैव प्रकट-

यति । केचन तु—नैतद्वक्तुमपि मनागपि सङ्कोचमनुभवन्ति यद् विगतेषु ५०–५५ वर्षेषु हिन्दीं प्रति विशेषरूपेण सर्वेषां समनोयोगप्रवृत्तेर्दर्शनात्—मैथिली—मागधी भोजपुरी—व्रज—डिंगलप्रभृतिभाषाणामुपेक्षा समजनि । तासां च प्रगतेरवरोधेन ताः मृतप्रायाः सन्ति । तथैव यदि हिन्द्या अद्य प्रचारेण भारतस्य अन्यान्यप्रादेशिकभाषाणां समुन्नतेर्विनाशः सम्भाव्यते, तर्हि तत्र हानेरथवा चिन्तायाः कापि नास्ति वार्ता ।

अन्यतो भारतीयसंविधाने भारतं सङ्घरूपेणास्ति स्वीकृतम् । भिन्नभिन्नप्रान्तानां राज्यत्वमुद्घुष्यते । प्रादेशिकभाषाणां विकासस्य वार्ता अपि शोश्रूयन्ते । शिक्षायास्तथा शासनस्य च सर्वेष्वपि क्षेत्रेषु प्रादेशिकभाषाणामेव प्रयोगं कर्तुमाग्रहः क्रियते । न सम्यग विज्ञातुं पारयामो यत्—परिस्थितावस्यां राष्ट्रस्य राष्ट्रियतायाश्च किं भविष्यति । शिक्षणालयेषु संस्कृताध्येतॄणां छात्राणां संख्या प्रतिवर्षमुत्तरोत्तरं क्षीणां दशामुपयान्तीयमद्य न गण्या इवाऽभूत् ।

हिन्दीभाषिप्रान्तेषु तु येषां छात्राणां संस्कृताऽध्ययनेऽभिलाषो भवेत्तर्हि तैर्विज्ञानस्य शिक्षा परित्यक्तव्या, भाषाचतुष्टयी च पठनीया भवति । इयत् मूल्यन्तु कश्चन विरल एव दातुं शक्ष्यति । परिणामोऽयं जायते यत्—संस्कृताध्ययनात् छात्रो विनिवर्तते । अस्य दुष्परिणामोऽद्य कामं न दृग्गोचरीभवेत्, परं २०–२५ वर्षाणामन्ते हिन्द्या सहैव सर्वा एव प्रादेशिकभाषाः क्षीणतामवश्यं यास्यन्तीति । संस्कृतस्य दुग्धेन पोषणमलभमानया कयापि भाषया पूर्णतया स्वोन्नति-सम्पादनस्याऽभिमानो नैव कर्तव्यः । संस्कृताश्रयं विना हिन्द्या दशा कियती शोचनीया भवति—इति तु प्रतिदिनमनुभूयते एव विद्वद्भिः । अस्माभिरियं हिन्दी राज्यभाषात्वेन तु स्वीकृता, परं तत् गुरुतरं दायित्वं निर्वोढुं हिन्दीभाषा प्रभवेत्—एतदुद्दिश्यैव सा 'संस्कृतनिष्ठा' इति विशेषणेन विशेषिता ।

हिन्दीभाषा राज्यभाषैवं राष्ट्रभाषा वस्तुतस्तदैव भवितुं शक्ष्यति, यदा सा संस्कृतोन्मुख्येव स्थास्यति । अस्य स्पष्टार्थस्त्वमेव यद्—हिन्द्याः 'राज्यभाषे' त्युपाधिरयं भरतेन विहितं प्रभोः श्रीरामस्य पादुके शिरसि निधाय रामस्य प्रतिनिध्यरूपेऽयोध्याराज्यस्य कार्यभारस्य पर्यवेक्षणमिवास्ति । परं हिन्दीभाषिप्रान्तेष्वपि संस्कृताध्ययनं प्रति छात्राणां प्रवृत्तिः स्वल्पतमैव दृश्यते । वृक्षस्य मूले विच्छिन्ने जाते तस्य वृक्षस्य शाखाः पुष्पैः फलैश्च समृद्धा भविष्यन्तीति स्वभावात् प्रतीपमेतत्, सर्वथाऽसम्भवि च ।

'भिन्नभिन्नावयवानां समुन्नत्या सहैव सम्पूर्णस्य शरीरस्यापि कृते सुखस्य स्वास्थ्यस्य च लाभो भवेत् अयमेवास्माकं परम्पराप्राप्तः सन्मार्गो विद्यते । विचारमिममादाय यदि वयमग्रेसरा भवेम तदा तत्कालसंप्राप्तानां प्रलोभनानां दूरतः परित्यागः परमावश्यको भविष्यति । देशस्य समाजस्य च दैनन्दिनं जीवनमपि परिचालनीयमेव । अनुभवश्चायं यदद्यतन्याऽविकसितया हिन्दीभाषया राष्ट्रस्य सर्वाण्यमपि कार्याणि परिचालयितुं न शक्यन्ते । इतश्च मनोयोगं दत्वा यदि हिन्दीभाषिणो जनाः संस्कृतमङ्गीकुर्वन्ति, किन्तु अन्यान्यप्रादेशिकभाषाभाषिणः परिस्थितिवशात् संस्कृतं त्यक्तुं भवन्ति बाध्याः तदा तद्विषमदशायां हिन्द्या विरोधो वृद्धिमेव गमिष्यति, मिथो मनोमालिन्यं च प्रैधिष्यते । एवं राष्ट्रस्य स्वास्थ्यजनके विकासे नानाबाधा उत्पत्स्यन्ते । अस्याः परिस्थितेः परिणाम एक एव भवितुं शक्नोति यत् 'द्वयोः कलहे तृतीयस्य लाभः' इति लोकोक्तिरियमत्र याथार्थ्येन चरितार्था भविष्यति । आंग्लभाषाया दासत्वस्य, भारं वयमद्यवत् चिरकालं यावद् वक्ष्यामः । किमधिकं पुनर्भारतं भारतमेव न स्थास्यति ।

## संस्कृतशिक्षाया अनिवार्यत्वम्

जानेऽहं विचारेणानेन प्रेरितः कांग्रेससस्य संसत्सदस्यो महामनाः चपलाकान्तभट्टाचार्यो लोकसभायामेकं

...तन्मंडलं, वृषराशिमंडलं, ...वर्णाश्रममंडलं, आढकमण्डलम् च अथ तृतीये वृत्ते युग्मो मिथुनराशिमण्ड-...ं, कालपुरुषमण्डलम्, शशमण्डलम्, कपोत-मण्डलम्, लुब्धकमण्डलम, अर्णवयानमण्डलम, चित्रपटमण्डलम, अभ्रमण्डलं, चत्वालमण्डलम् । चतुर्थे वृत्ते अरण्यमार्जारमण्डलम, कीटःकर्क-राशिमण्डलम्, शुनीमण्डलम्, एकशृङ्गीयमण्डलम्, सरट-कृकलासमण्डलम, पद्ममीन पद्मवातो मीनस्य मण्डलम् । तथा पञ्चमे कृते सिंहशावकमण्डलम, सिंहराशिमण्डलम्, ह्रदसर्पमण्डलम्, षष्ठांशमण्ड-

...॥१५॥

...ष्टका ।
राजस्...को तथा ॥१६॥

# खगोलवर्णनम्

पूर्वानुवृत्तम्—

( ले० श्रीमल्लिनाथचौमालः )

त्रिशंकुमंडलम् "अत्राकृशिराः त्रिशुंकुश्च तिष्ठात्यमरसन्निभः" इति वाल्मीकिः। मयूरमण्डलं "सृजन् दक्षिणमार्गस्थान् सप्तर्षीनपरान् पुनः" इति वाल्मीकिः। एवमेव सर्वे।

अथान्य प्रकारेण ताराव्यूहज्ञानम्—

सुमेरुतोऽयंहि कुमेरुपर्यन्तम्—
सत्क्रमो द्वादशमण्डलेषु।
अजादिराश्याश्रितमण्डलानाम्—
द्रष्टुं तदर्थं रचयामि चित्रम् ॥९॥

व्यासार्धमानेन विधाय वृत्ते
भमण्डलस्यापरपूर्वखण्डे।
याम्योत्तराख्यस्य समान्तराणि
कार्याण्यथ द्वादश मण्डलानि ॥१०॥

भगोलचित्रे
उत्तर गोलार्द्धम्




---

विधेयकमानीतवान्। तेन च हिन्द्या सहैव संस्कृतमपि राजभाषात्वेन मान्या भवेदिति सूचनां कृतवान्। संभाव्यते यदेष विधेयको विषयस्यास्य चर्चां कर्तुमेव सम्मुखभाग-

…विधेयकचर्चाकाले यद्यतासां सर्वासां संस्कृताध्ययनात् छात्रो विनिवर्तत… य कामं न दृग्गोचरीभवेत्, परं २०–२… क्रियेत चेत्तर्हि सर्वैरपि हिन्द्या सहैव सर्वा एव प्रादेशिकभाषाः क्षीणता… प्रवेशपरीक्षा- यास्यन्तीति। संस्कृतस्य दुग्धेन पोषणमलभमानया… प्रारम्भो कयापि भाषया पूर्णतया स्वोन्नति-सम्पादनस्याऽभिमानो …न्तु नैव कर्तव्यः। संस्कृताश्रयं विना हिन्द्या दशा कियती शोचनीया भवति—इति तु प्रतिदिनमनुभूयते एव विद्वद्भिः। अस्माभिरियं हिन्दी राज्यभाषात्वेन तु स्वीकृता, परं तत् गुरुतरं दायित्वं निर्वोढुं हिन्दीभाषा प्रभवेत्—एतदद्दष्ट्वैव सा 'संस्कृतनिष्ठा' इति विशेषणेन विशेषिता।

न ६५

पशु त्रिकोणोऽजतिमिंगलौ
यज्ञकुण्डयामौ प्रथमे वृत्तौ च।
चित्रक्रमेलाऽजवृषा घटी—
सुवर्णाश्रमश्वांढकमण्डलं तु ॥११॥

द्वितीयवृत्तेऽथ तृतीयवृत्तो—
युग्मोऽथ कालाख्यपुमान् शशश्च
कपोतलुब्धाऽर्णवयानचित्र—
…चत्वालमिताश्चतुर्थे ॥१२॥

जानेऽहं वि… दस्यो महामनाः
…ण्यमार्जारकीटौ शुनी
…ी सरटपक्षमीनौ प्रसिद्धौ।

## भगोलचित्रे
## दक्षिणगोलार्द्धम्




तथा पंचमे सिंहपुत्रोऽथ सिंहो
हृदाद्विश्च षष्ठांशको वायुयंत्रम् ॥१३॥

सप्तर्षयः श्वयुगलं करिमुण्डकन्या–
हस्तत्रिशंकुवनदंशकसंज्ञकानि ।
षष्ठेऽथ सप्तमवृतौ शिशुमारभूतेशौ–
तौल्यसिंहमहिषासुरवृतघूम्राः ॥१४॥

वृत्तेऽष्टमे हरकुलेशकिरीटसर्पा
याम्य त्रिकोणमथ वृश्चिकराशिपूर्वम् ।
नवमे तक्षको वीणा सर्पधारा धनुस्तथा–
याम्यं किरीटसंज्ञं च दूरवीक्षणवेदिके ॥१५॥

दशमे कबजम्बूकेशु गरुत्मत्तविष्ठका ।
नक्षाणुवीक्षणो सिन्धुर्मयूराष्टांशकौ तथा ॥१६॥

एकादशे शिफा गोधा पक्षिराजाश्वकुम्भकाः ।
ततो दक्षिणमीनश्चसारसश्चध्रुभृत्तथा ॥१७॥

द्वादशे कश्यपीयं तु ध्रुवमाता तिमिंगिलः ।
राशिर्भास्करसंपातिहृदग्रावास्तथैव च ॥१८॥

अथान्यप्रकारेण तारामण्डलानां निवेशस्तज्ज्ञानां चाह । सुमेरुत उत्तरध्रुवात् कुमेरुपर्यन्तं दक्षिणध्रुवपर्यन्त द्वादशमण्डलेषु द्वादशवृत्तविभागेषु, अजादिराश्याश्रितमण्डलानां मेषादिराशय एवाश्रयो ज्ञानार्थमुपायो येषां वक्ष्यमाणमण्डलानां ताराव्यूहानां द्रष्टु दर्शनार्थं अयं हि सत्क्रमः सरलरीतिरित्यर्थः । पूर्वोक्तध्रुववेष्टनक्रमादयं क्रमः श्रेष्ठः सरल इत्यभिप्रायः । तदर्थं चित्रं रचयामि यत्र मण्डलानां निवेशनेन तद्विषयकं स्फुटं ज्ञानं भवति । तद्वदाकारोऽपि । अथ चित्ररचना—व्यासार्धमानेन, अभीष्टत्रिज्याप्रमाणेन भमण्डलस्य अपरपूर्वखण्डरूपे वृत्ते विधाय अथ तत्र याम्योत्तरवृत्तस्य समानान्तराणि द्वादशमण्डलानि वृत्तानि कार्याणि (द्रष्टव्यं चि० २) अथ प्रथमे वृत्ते प्रथमे मण्डले च पशुमण्डलं, त्रिकोणमण्डलं अजोमेषः, मेषराशिमण्डलं, मीनमण्डलं, यज्ञकुण्डमण्डलं, यमीमंडलं च ज्ञेयं यथा चित्रे निवेशितं, तत्रस्थान एव ज्ञेयम् । द्वितीयवृत्ते चित्रक्रमेलमंडलं, अजो ब्रह्मा तन्मंडलं, वृषराशिमंडलं, घटीमंडलम्, सुवर्णाश्रममंडलं, आढकमण्डलम् च ज्ञेयम् । अथ तृतीये वृत्ते युग्मो मिथुनराशिमण्डलम्, कालपुरुषमण्डलम्, शशमण्डलम्, कपोतमण्डलम्, लुब्धकमण्डलम्, अर्णवयानमण्डलम्, चित्रपटमण्डलम्, अभ्रमण्डलं, चत्वालमण्डलम् । चतुर्थे वृत्ते अरण्यमार्जारमण्डलम्, कीटःकर्कराशिमण्डलम्, शुनीमण्डलम्, एकशृङ्गीयमण्डलम्, सरट-कुकलासमण्डलम, पक्षमीन पक्षवातो मीनस्य मण्डलम् । तथा पञ्चमे कृते सिंहशावकमण्डलम्, सिंहराशिमण्डलम्, हृदसर्पमण्डलम्, षष्ठांशमण्ड-

लम्, वायुयन्त्रमण्डलम। अथ षष्ठे सप्तर्षिमण्डलम्, श्वयुगलमण्डलं, करिमुण्डमण्डलम्, कन्याराशिमण्डलम्, हस्तमण्डलम्, त्रिशंकुमण्डलम्, वनदंशको वनमक्षिका तन्मण्डलम्। अथ सप्तमे पश्चिमगोलार्धस्य प्रथमे वृत्ते (चि० ३) शिशुमारमण्डलम्, भूतेशमण्डलम्, तुलाराशिमण्डलम्, शार्दूलमण्डलम् महिषासुरमण्डलम्, वृत्तमण्डलम्, धूम्रोधूम्राटमण्डलम्। अथाष्टमे वृत्ते हरकुलेशमण्डलम् किरीटमण्डलम्, सपमण्डलम्, वृश्चिकराशिमण्डलम्, याम्यत्रिकोणमण्डलम्। नवमे तक्षकमण्डलम्, वीणामण्डलम्, सर्पधारामण्डलम्, धनराशिमण्डलम्, याम्यकिरीटमण्डलम्, दूरवीक्षणमण्डलम, वेदीमण्डलम। दशमे बकमण्डलम्,

## भगोलचित्रे
### पश्चिमगोलार्द्धम्
### उत्तरध्रुव




## भगोलचित्रे
### पूर्वगोलार्द्धम्
### उत्तरध्रुव




शृगालमण्डलम्, सिन्धुमण्डलम्, मयूरमण्डलम्, अष्टांशकमण्डलम्। बाणमण्डलम्, गरुडमण्डलम् श्रविष्डामण्डलम्, मकरराशिमण्डलम्, अणुवीक्षणमण्डलं, एकादशे शिफामण्डलम्, गोधामण्डलम्, पक्षिराजमण्डलम्, अश्वमण्डलम्, अश्वरतमण्डलमिति केचित्, कुम्भराशिमण्डलम्, दक्षिणमीनमण्डलम्, सारसमण्डलम्, चंचुभृत् मण्डलम्। द्वादशे काश्यपीयमण्डलम्, ध्रुवमातामण्डलम्, मीनराशिमण्डलम्, भास्करमण्डलम्, सम्पातिमण्डलम्, ह्रदमण्डलम्, ग्रावमण्डलम्। इमानि मण्डलानि सौम्यध्रुवतो याम्यध्रुवपर्यन्तं क्रमशो ज्ञेयानि। पूर्वभगोलखण्डे चित्रे पश्चिमभगोलखंड चित्रे च द्रष्टव्यानि। —क्रमशः



# सम्पादकीयम्

## स्वतन्त्रतादिवससमारोहः

प्रतिवर्षवत् अस्मिन्नपि वत्सरे स्वतन्त्रतादिवससमारोहः समस्तेऽपि भारते महता उत्साहेन पूर्णतमेन सम्भारेण च मानितोऽभूत् । अगस्तमासस्य १५ दिवसे सोमवारस्य प्रातःकाले भारतप्रधानमन्त्री श्रीनेहरूमहाभागो रक्तदुर्गस्य प्राचीरोपरि भारतीयं राष्ट्रध्वजं प्रास्फोरयन्, भारतस्य अपारजनतायाः सम्मुखे तमिमं राष्ट्रोत्सवं सममानयत् । अनुमानतस्तस्मिन् समये लक्षद्वयमिता जनता समवेताऽभूत्समारोहेऽस्मिन् । उत्सवस्य भूमिकां संसूच्य महामन्त्री जनतामिमां प्रार्थयत यत्—संकुचितां स्वार्थभावनां दूरे कृत्वा देशस्य तत्सम्बन्धिस्वाधीनतायाश्च सर्वतोभावेन संरक्षणमेव साम्प्रतं कर्तव्यम् । पञ्चाम्बुप्रदेशे भाषासम्बन्धे, प्रान्तविभागसम्बन्धे च यः कलहः प्रवृत्तः सोऽतीव हानिकारकः, देशस्य स्वरूपविपरीतः, स्वतन्त्रतायाश्च पक्षे सुतरां घातकः । स हि 'अकालीसम्प्रदायस्थान्' अतितरामभर्त्सयत्, ये हि पञ्चाम्बुप्रदेशस्य विभागं प्रार्थयन्ते । अयोग्यमस्तिष्का एव कस्याश्चिद् भाषायाः विरोधे कलहायन्ते । ये जनाः स्वकीयं प्रान्तं, स्वां भाषामेव च स्वदेशाऽपेक्षया महत् मन्यन्ते ते हि राष्ट्रस्य महतीं हानिं सम्पादयन्तीति बोद्धव्यम् ।

स्वतन्त्रताप्राप्त्यैव नास्माकं कर्तव्यस्य समाप्तिः । नाऽपि च स्वातन्त्र्याय युद्धमियता समाप्यते । स्वतन्त्रतायुद्धं तु सर्वदा प्रचलितं स्यात् । सेयं स्वतन्त्रता परिश्रमेण, बलिदानेन चापि सुस्थिरा भवेत् । उत्तरसीमायां यदिदं संकटं समुपस्थितं तद्विषये मार्मिकरूपेण सूचितम् प्रधानमन्त्रिणा-यद्वयं द्वितीयराष्ट्रभूमिं वा तद्विषयिणीं वार्तां वा न स्प्रष्टुमिच्छामः । किंतु यत्रास्माकं राष्ट्रस्य भूमिर्हितं वा आक्रम्येत नेदं कदाचिदपि सह्यं भवेत् । एवमेव 'गोआ' प्रदेशो नास्माभिर्विस्मृतः । ये हि तं प्रदेशमधिकुर्वन्ति, तान् वयं प्रतिक्षणं स्मरामः, शीघ्रमेव च तदिदं तेषां विदितं भवेत् । गोआप्रदेशस्योपरि अस्माभिरधिकारो न कृतः, तदिमस्माकं दुर्बलत्वं न विज्ञेयम् । तदिदमस्माकं धैर्यं, विवेकशीलत्वं चास्ति, यदस्माभिरद्यावधि स्वतन्त्रोऽपि हस्तो नास्य कृते प्रसारितः । 'पञ्चवर्षीययोजनायाः' उल्लेखं कृत्वा मन्त्रिणा सूचितं यदेतत् भारतराष्ट्रस्य जातीयं चित्रम् । अन्ते स्वतन्त्रतायाः कृते सम्पूर्णजनतायाः अभिनन्दनं कृत्वा मङ्गलकामना कृता यत् सम्पूर्णभारतीयजनतायै एव एवंविधाः सहस्रसहस्रमङ्गलदिवसाः सर्वदैव शुभसूचकाः शुभपरिणामदायकाश्च भूयासुरिति ।

## राजस्थानराजधान्यां स्वतन्त्रतासमारोहः

एवमेव जयपुरराजधान्यामपि महतोत्साहेन सोयमुत्सवः सममान्यत । सचिवालयप्राङ्गणे (सेक्रेटरियेट) राज्यपाल श्रीगुरुमुखनिहालसिंहमहोदयेन सैनिकसमारोहस्याऽभ्यर्थना स्वीकृता । राज्यपालमहोदयेन यथैव राष्ट्रध्वजस्याऽऽरोपणं कृतं तथैव अश्वारोहसेनया सैनिकवाद्यध्वनिः सर्वतो ध्वनितः । एतदनन्तरं विभिन्नविभिन्नशिक्षासंस्थानां द्विसहस्रतोऽप्यधिकाश्छात्राः शारीरिकव्यायामस्य प्रदर्शनमकार्षुः । अतिकौशलेन भारतस्य राजस्थानस्य च मानचित्रमपि प्रादर्शयन् । ततः श्रीमत्या राज्यपालमहिष्या बालकेभ्यो मिष्टान्नवितरणमक्रियत ।

प्रातः नगरस्य प्रधानचतुष्पथ्यां (मानक चौक) मुख्यमन्त्री श्रीमोहनलालसुखाडियामहोदयो राष्ट्रध्वजं प्रास्फोरयत् । रात्रौ चाऽस्मिन्नेव स्थाने सार्वजनिकसभाया आयोजनमक्रियत । एवमेव नगरस्य विभिन्नविभिन्नसंस्थासु ध्वजारोपणमहोत्सवः सममान्यत । ध्वजारोपणमहोत्सवे प्रधानमन्त्रिणा प्रोक्तम् यत्—'सहस्रसहस्रनरनारीणां त्यागस्य, बलिदानस्य च परिणामस्वरूपे सेयं स्वतन्त्रताऽस्माभिः समधिगता । सोऽयं राष्ट्रध्वजोऽस्माकं त्यागस्य प्रतीकभूतः । सम्प्रति देशस्य सर्वात्मना उन्नयनमस्माकं कर्तव्येषु प्रधानतमम् ! अत एव देशस्य दीनतां दारिद्र्यं च दूरयितुं वयं संघर्षाय सर्वथा सज्जाः । यतो हि सर्वेषां राष्ट्राणां पुरतो भारतस्य महत्वं च स्वातन्त्र्यं च सर्वदार्थमस्माभिः स्थापनीयम् ।

स्वतन्त्रतादिवसस्य मङ्गलमहोत्सवं सर्वात्मना सम्मानयन्तो वयमपि भगवन्तं प्रार्थयामहे—

आदिकाले स्वतन्त्रस्य भारतस्य स्वतन्त्रता ।
लोकमङ्गलभूर्भूयाद् भव्योदर्का भुवस्तले ॥१॥

# लघुकथा

—ले० कमलानाथशर्मा

मम पितुरवस्था षष्टिवर्षासन्ना । वस्त्रविक्रयव्यवसाये स हि धनसंपन्न आसीत् । एकदा अकस्मात् हृद्रोगः, शरीरोष्मप्रवृद्ध्या भयानकी व्याकुलता चोदपद्यत । मल-मूत्रयोर्द्वारे अपि रुद्धे, उदरं प्रफुल्लममूत् । अतिकठिनतया डाक्तरेण नलिकाद्वारा मूत्रं निःसारितम् । अतिखेदोऽस्ति अस्यामेव अवस्थायां विंशतिदिनानि व्यतीयुः । अन्नं जलं च सर्वथा रुद्धम् । चिकित्सायां सहस्रानुमिता मुद्रा व्ययिताः । किन्तु न कोऽपि लाभोऽभवत् । डाक्तरवैद्यै-र्विवशता प्रकटीकृता । गृहस्थैर्विवकिभिः, वृद्धैश्च निश्चितं यत् अस्यामवस्थायां भेषजदानं केवलं कष्ट-प्रदानमेव । अतएव वयं त्रयोऽपि भ्रातरः साम्प्रतं गीता-पाठमभावयाम । प्रत्येकाध्यायसमाप्तौ रामध्वनिं कुर्वन्तः कातरभावेन भगवतः प्रार्थनामकुर्म । एवं व्यतीयुः ३० घण्टाः ।

अकस्माद् एको भव्यमूर्तिर्गृहाभ्यन्तरे समागत्य दुःख-कारणमपृच्छत् । वयं सर्वामपि रोगकथां तस्मै न्यवेदयाम । सहसा महात्माऽसौ एकां पुटिकां दत्वाजलेन सहचूर्णं पाययितुमकथयत् । यत्र विश्वस्ता डाक्तरा अपि निराशा अभवन्, तत्र अनेन चूर्णं न किं भवेत् । इत्या-सीदविश्वासः । किंतु इदानीं द्वितीय उपाय एव नाऽ-सीत् । अतएव सर्वेषां संमतया तत् चूर्णमदीयत जलेन सह ।

किन्तु आश्चर्यस्य घटना । एकघण्टानन्तरमेव पित्रा नेत्रे उद्घाटिते । मुखमपि यथावद् बभूव । मूत्र-पुरीषयोर्द्वारे अपि यथावदभूताम् । वैद्यडाक्तराः सर्वे चकिता अभवन् । देहत्यागोद्यतो नः पिता घण्टाद्वये स्वस्थः समभवत् । निर्बलता अवश्यमासीत्, किन्तु नवजीवनं तेन लब्धमिति सर्वेषां विश्वासोऽभवत् ।

महात्मनस्तस्य दूरे दूरे अनुसन्धानमक्रियत, किन्तु न किञ्चित्फलमभूत् । असौ क आसीत् ? किं वा गीता-माता ? अथवा मूर्तिमान् रामध्वनिः ?

मेरे पिता की अवस्था साठ वर्ष की थी । कपड़ों के विक्रय के व्यापारमें वे धनसम्पन्न थे । एक बार अचानक हृदय रोग और वृद्धावस्था की बड़ी व्याकुलता उत्पन्न होगई । मलमूत्र का द्वार भी रुक गया था और पेट फूल गया था । बहुत कठिनाई से डाक्टर द्वारा नली से मूत्र निकाला गया । बहुत दुःख है कि इसी अवस्था में २० दिन बीत गये । अन्न जल सभी रुक गये । चिकित्सा के लिए सैंकड़ों रुपये खर्च किए गए किन्तु कोई लाभ नहीं हुआ । डाक्टरों और वैद्यों ने विवशता प्रकट कर दी । सबों ने निश्चित किया कि इस समय दवा देना केवल कष्ट देना है । इसलिए हम तीनों भाइयों ने गीतापाठ आरम्भ किया । प्रत्येक अध्याय समाप्त होने पर कातरभाव से रामध्वनि करते हुए प्रार्थना करने लगे । इस प्रकार ३० घण्टे बीत गये ।

अचानक एक भव्यमूर्ति ने द्वार के अन्दर आकर दुःख का कारण पूछा । हम सबों ने उनकी रोगकथा को निवेदन किया । महात्मा ने हमको एक पुडिया देकर जलके साथ पिलाने को कहा । जब विश्वस्त डाक्टरों को भी निराशा होगई तब इस चूर्ण से क्या होगा ? यही अविश्वास था किन्तु इसका दूसरा उपाय भी नहीं था । अतः सबों की सम्मति से चूर्ण दे दिया गया ।

लेकिन आश्चर्य की घटना । १ घण्टे के बाद ही पिताजी ने आँखें खोल दीं । मुख भी उसी प्रकार हो गया । मलमूत्र के द्वार भी वैसे ही खुल गए । वैद्य और डाक्टर सभी चकित हुए । देह त्यागने वाले पिता दो घण्टे में बिलकुल स्वस्थ होगए । निर्बलता अवश्य थी किन्तु उन्हें नवजीवन मिल गया । यह सबों को विश्वास होगया ।

महात्मा का दूर दूर तक अनुसन्धान किया किन्तु कोई नतीजा नहीं निकला । ये कौन था ? क्या भगवान् ! या गीतामाता ? अथवा मूर्तिमान् रामध्वनि ?



# सूक्ति-सुधा

सुहृदि निरन्तरचित्ते गुणवति भृत्ये प्रियासु नारीषु ।
स्वामिनि शक्तिसमेते निवेद्य दुःखं जनः सुखीभवति।

जिसके मन में अपने प्रति कोई अन्तर, भेदभाव नहीं हो, ऐसे मित्र में, सेवा आदि उत्तम गुण वाले नौकर में, प्रिय स्त्रियों में, शक्तियुक्त स्वामी में अपना दुःख कह देने पर मनुष्य सुखी होता है। अर्थात् दुःख भार हल्का हो जाता है ॥१

वित्तं परिमितमधिकव्ययशीलं पुरुषमाकुलीकुरुते।
ऊनांशुकमिव पीनस्तनजघनायाः कुलीनायाः ॥२

अधिक खर्च करने वाले पुरुष को अन्दाज का मिला हुआ धन व्याकुल कर देता है। तङ्ग, या छोटा कपडा ऐसी कुलीन महिला को व्याकुल कर देता है जिसके स्तन और कमर के नीचे का हिस्सा पुष्ट (भारी) हो ॥२

गुणमधिगतमपि धनवानचिरान्नाशयति रक्षति दरिद्रः
मज्जयति रज्जुमम्भसि पूर्णः कुम्भो न खलु तुच्छः॥३

धनवान् किसी गुण [उपकारादि] को प्राप्त करके भी थोडे ही काल में उसको नष्ट कर देता है, भूल जाता है। भरा हुआ घडा जल के अन्दर रस्सी को डुबो देता है, किन्तु हल्का घडा (खाली) रस्सी को नहीं डूबने देता (भरे घडे के साथ यदि रस्सी रहती है तो वह भी डूब जाती है किन्तु खाली घडे के साथ वह भी जल पर तैरती रहती है ॥३

स्वल्पा इति रामबलैर्ये न्यस्ता नाशये पयोराशेः।
ते शैलाः स्थितिमन्तो हन्त लघिम्नैव बहुमानः ॥४

छोटे समझकर जिनको श्रीराम की सेनाओं ने (अर्थात् सेतु बांधने वाले वानरों ने) समुद्र के गर्भ में नहीं डाला, वे ही पर्वत इस समय स्थित हैं (अर्थात् सेतुबन्धन के काम में बडे बडे पर्वतों को तो छांट छांट कर ले लिया गया था किन्तु छोटे पर्वतों को मतलब का नहीं समझ कर छोड दिया गया था। वे छोटे पर्वत ही अब तक स्थित हैं), अहा, छोटेपन से भी कहीं सम्मान, आदर, लाभ होता है ॥४

व्यथयतितरामुपेतः स्वस्थप्रकृतेरवद्यलेशोऽपि।
भृशमुद्विजते चक्षुः सक्तेन रजःकणेनाऽपि ॥५

जिसकी प्रकृति स्वस्थ है, जो ठीक ठीक अपने कार्य कर रहा है, उसको समीप आया हुआ थोडा भी दोष (अनुचित, बुराई) अत्यन्त पीडा करता है। (देखिये) यह आंख, मट्टी का एक कण भी पड जाय तो अत्यन्त दुखी होती है। एक कण से भी जैसे आंख खटकने लगती है, इसी तरह रास्ते पर चलने वाले सज्जन को थोडा सा भी अनुचित बर्ताव बहुत दुःख पहुंचाता है ।५

रजिस्टर्ड क्रमांक जे० ७



प्रकाशकः—जयबहादुरसिंह पता:—गोपालजी का रास्ता, जयपुर (राजस्थान)